चिह्नैः, इष्टकास्थितशुष्कपल्लवविष्टरानुमितपथिकविश्रामैः, विश्रान्तकार्पटिकप्रस्फोटितचरणधूलिधूसरकिसलयलाञ्छितोपकण्ठैः, पत्रसंकरासुरभीकृताशिशिरपङ्किलविवर्णास्वादुजलैः, व्रततिग्रन्थिग्रथितपर्णपुटतृणपूलीचिह्नानुमेयैर्जरत्कान्तारकूपैरसुलभसलिलतयानभिलषितोद्देशया, मधुबिन्दुस्यन्दिसिन्धुवारवनराजिरजोधूसरिततीराभिश्च कुब्जकलताजालकैर्जटिलीकृतसैकताभिरध्वगोत्खातवालुकाकूपकोपलभ्यमानकलुषस्वल्पसलिलाभिः शुष्कगिरिनदिकाभिर्विषमीकृतान्तरालया, कुक्कुटकुलकौलेयकरटितानुमीयमानगुल्मगहनग्रामटिकया शून्यया दिवसमटव्या गत्वा परिणते रविबिम्बे बिम्बारुणातपविसरे वासरे निःशाखीकृतकदम्बशाल्मलीपलाशबहुलैः शिखरशेषैकपल्लवविडम्बितातपत्रैः पादपैरूर्ध्वस्थितप्ररोहस्थूलस्थाणुमूलग्रन्थिजटिलैश्च हरितालकपिलपक्ववेणुविटपिदलरचितवृतिभिर्मृगभयकृततृणपुरुषकैर्विपाकपाण्डुभिः फलिनैः प्रियङ्गुप्रायैरटवीक्षेत्रैर्विरलीकृतवनप्रदेशे चिरप्ररूढस्य रक्तचन्दनतरोरुपरि बद्धम्, सरसपिशितपिण्डनिभैरलक्तकैरभिनवशोणितारुणेन रक्तचन्दनरसेन चार्द्रम्, जिह्वालतालोहिनीभी रक्तपताकाभिः केशकलापकान्तिना च कृष्णचामरावचूलेन प्रत्यग्रविशसितानां जीवानामिवावयवैरुपरचितदण्डमण्डनम्, परिणत[1]वराटकघटितबुद्बुदार्धचन्द्रखण्डखचितं सुतमहिषरक्षणावतीर्णदिनकरावतारितशशिनेव विराजितशिखरम्, दोलायितशृङ्गसङ्गिलोहशृङ्खलावलम्बमानघर्घररवघोरघण्टया च घटितकेसरिसटारुचिरचामरया काञ्चनत्रिशूलिकया लिखितनभःस्थलमितस्ततः पथिकपुरुषोपहारमार्गमिवालोकयन्तं महान्तं रक्तध्वजं दूरत एव ददर्श ।

तदभिमुखश्च किंचिदध्वानं गत्वा केतकीसूचिखण्डपाण्डुरेण वनद्विरददन्तकपाटेन परिवृताम्, लोहतोरणेन च रक्तचामरावलिपरिकरां कालायसदर्पणमण्डलमालां शबरमुखमालामिव कपिलके-

१ 'परिणद्ध' इति क.

शभीषणां बिभ्राणेन सनाथीकृतद्वारदेशाम्, अभिमुखप्रतिष्ठितेन च विनिहितरक्तचन्दनहस्तकतया रुधिरारुणयमकरतलास्फालितेनेव शोणितलवलोभलोलशिवालिह्यमानलोहितलोचनेन लोहमहिषेणाध्यासिताञ्जनशिलावेदिकाम्, क्वचिद्रक्तोत्पलैः शबरनिपातितानां वनमहिषाणामिव लोचनैः क्वचिदगस्तिकुड्मलैः केसरिणामिव करजैः क्वचित्किंशुककुसुमकुड्मलैः शार्दूलानामिव सरुधिरैर्नखरैः कृतपुण्यपुष्पप्रकराम्, अन्यत्राङ्कुरितामिव कुटिलहरिणविषाणकोटिकूटैः पल्लवितामिव सरसजिह्वाच्छेदशतैः कुसुमितामिव रक्तनयनसहस्रैः फलितामिव मुण्डमण्डलैरुपहारहिंसां दर्शयन्तीम्, शाखान्तरालनिरन्तरनिलीनरक्तकुक्कुटकुलैः श्वभयादकालदर्शितकुसुमस्तबकैरिव रक्ताशोकविटपैर्विभूषिताङ्गणाम्, बलिरुधिरपानतृष्णया समागतैश्च वेतालैरिव तालैर्दीयमानफलमुण्डोपहाराम्, शङ्काज्वरकम्पितैरिव कदलिकावनैर्भयोत्कण्टकितैरिव श्रीफलतरुखण्डैस्त्रासोर्ध्वकेशैरिव खर्जूरवनैः समन्ताद्गहनीकृताम्, विदलितवनकरिकुम्भविगलितरक्तमुक्ताफलानि नवरुधिरारुणबलिसिक्थलुब्धमुग्धकृकवाकुग्रस्तमुक्तानि विकिरद्भिरम्बिकापरिग्रहदुर्ललितैः क्रीडद्भिः केसरिकिशोरकैरशून्योद्देशाम्, प्रभूतरुधिरदर्शनोद्भूतमूर्छापतितेनेव प्रतिबिम्बितेनास्तताम्रेण सवित्रा ताम्रतरीकृतैः क्षतजजलप्रवाहैः पिच्छिलीकृताजिराम्, अवलम्बमानदीपधूमरक्तांशुकेन ग्रथितशिखिगलवलयावलिना पिष्टपिण्डपाण्डुरितघनघण्टामालभारिणा त्रापुषसिंहमुखमध्यस्थितस्थूललोहकण्टकं दत्तदन्तदण्डार्गलं गलत्पीतनीललोहितदर्पणस्फुरितबुद्बुदमालं कपाटपट्टद्वयं दधानेन गर्भगृहद्वारदेशेन दीप्यमानाम्, अन्तःपिण्डिकापीठपातिभिश्च सर्वपशुजीवितैरिव शरणमुपागतैरलक्तकपटैरविरहितचरणमूलाम्, पतितकृष्णचामरप्रतिबिम्बानां च शिरश्छेदलग्नकेशजालकानामिव परशुपट्टिशप्रभृतीनां जीवविशसनशस्त्राणां प्रभाभिर्बद्धबहलान्धकारतया पातालनिवासिनीमिवोपलक्ष्यमाणाम्, रक्तचन्दनखचितस्फुरत्फलपल्लवकलितैश्च बिल्वपत्र-

दामभिर्बालकमुण्डप्रालम्बैरिव कृतमण्डनाम्, शोणितताम्रकदम्बस्तबककृतार्चनैश्च पशूपहारपटहपटुरटितरसोल्लसितरोमाञ्चैरिवाङ्गैः क्रूरतामुद्वहन्तीम्, चारुचामीकरपट्टप्रावृतेन च ललाटेन शबरसुन्दरीरचितसिन्दूरतिलकबिन्दुना दाडिमकुसुमकर्णपूरप्रभासेकलोहितायमानकपोलभित्तिना रुधिरताम्बूलारुणिताधरपुटेन भृकुटिकुटिलभ्रुणा रक्तनयनेन मुखेन कुसुम्भपाटलितदुकूलकलितया च देहलतया महाकालाभिसारिकावेषविभ्रमं बिभ्रतीम्, संपिण्डितनीलगुग्गुलुधूपधूमारुणीकृताभिश्च प्रचलन्तीभिर्गर्भगृहदीपिकालताभिरङ्गुलीभिरिव महिषासुरशोणितलवालोहिनीभिः स्कन्धपीठकण्डूयनचलितत्रिशूलदण्डकृतापराधं वनमहिषमिव तर्जयन्तीम्, प्रलम्बकूर्चधरैश्छागैरपि धृतव्रतैरिव स्फुरदधरपुटैराखुभिरपि जपपरैरिव कृष्णाजिनप्रावृताङ्गैः कुरङ्गैरपि प्रतिशयितैरिव ज्वलितलोहितमूर्धरत्नरश्मिभिः कृष्णसर्पैरपि शिरोधृतमणिदीपकैरिवाराध्यमानाम्, सर्वतः कठोरवायसगणेन च रटता स्तुतिपरेणेव स्तूयमानाम्, स्थूलस्थूलैः शिराजालकैर्गोधागोलिकाकृकलासकुलैरिव दग्धस्थाण्वाशङ्कया समारूढैर्गवाक्षितेन, अलक्ष्मीसमुत्खातलक्षणस्थानैरिव विस्फोटव्रणबिन्दुभिः कल्माषितसकलशरीरेण, कर्णावतंससंस्थापितया च चूडया रुद्राक्षमालिकामिव दधानेन, अम्बिकापादपतनश्यामललाटवर्धमानार्बुदेन, कुवादिकदत्तसिद्धाञ्जनस्फुटितैकलोचनतया त्रिकालमितरलोचनाञ्जनदानादरश्लक्ष्णीकृतदारुशलाकेन, प्रत्यहं कटुकालाबुस्वेदप्रारब्धदन्तुरताप्रतीकारेण, कथंचिदस्थानदत्तेष्टकाप्रहारतया शुष्कैकभुजोपशान्तमर्दनव्यसनेन, उपर्युपर्यविश्रान्तकटुकवर्तिप्रयोगवर्धिततिमिरेण, अश्मभेदसंगृहीतवराहदंष्ट्रेण, इङ्गुदीकोशकृतौषधाञ्जनसंग्रहेण, सूचीस्यूतशिरासंकोचितवामकराङ्गुलिना, कौशेयककोशावरणक्षतिव्रणितचरणाङ्गुष्ठकेन, असम्यक्कृतरसायनानीताकालज्वरेण, जरां गतेनापि दक्षिणाप-

थाधिराज्यवरप्रार्थनाकदर्थितदुर्गेण, दुःशिक्षितश्रमणादिष्ट[1]तिलकाबद्धविभवप्रत्याशेन, हरितपत्ररसाङ्गारमषीमलिनशम्बूकवाहिना, पट्टिकालिखितदुर्गास्तोत्रेण, धूमरक्तालक्तकाक्षरतालपत्रकुहकतन्त्रमन्त्रपुस्तिकासंग्राहिणा, जीर्णमहापाशुपतोपदेशलिखितमहाकालमतेन, आविर्भूतनिधिवादव्याधिना, संजातधातुवादवायुना, लग्नासुरविवरप्रवेशपिशाचेन, प्रवृत्तयक्षकन्यकाकामित्वमनोरथव्यामोहेन, वर्धितान्तर्धानमन्त्रसाधनसंग्रहेण, श्रीपर्वताश्चर्यवार्तासहस्राभिज्ञेन, असकृदभिमन्त्रितसिद्धार्थकप्रहतिप्रधावितैः पिशाचगृहीतकैः करतलताडनचिपिटीकृत[2]श्रवणपुटेन, अविमुक्तशैवाभिमानेन, दुर्गृहीतालाबुवीणावादनोद्वेजितपथिकपरिहृतेन, दिवसमेव मशककणितानुकारि किमपि कम्पितोत्तमाङ्गं गायता, स्वदेशभाषानिबद्धभागीरथीभक्तिस्तोत्रनर्तकेन, गृहीततुरगब्रह्मचर्यतयान्यदेशागतोषितासु जरत्प्रव्रजितासु बहुकृत्वः संप्रयुक्तस्त्रीवशीकरणचूर्णेन, अतिरोषणतया कदाचिद्दुर्न्यस्ताष्टपुष्पिकापातोत्पादितक्रोधेन, चण्डिकामपि मुखभङ्गिविकारैर्भृशमुपहसता, कदाचिन्निवार्यमाणावासरुषिताध्वगारब्धबहुबाहुयुद्धपातभग्नपृष्ठकेन, कदाचित्कृतापराधबालकपलायनामर्षपश्चात्प्रधावितस्खलिताधोमुखनिपातोपलस्फुटितशिरःकपालभुग्नग्रीवेण, कदाचिज्जनपदकृतनवागतापरधार्मिकादरमत्सरोद्बद्धात्मना, निःसंस्कारतया यत्किंचनकारिणा, खञ्जतया मन्दं मन्दं संचारिणा, बधिरतया संज्ञाव्यवहारिणा, रात्र्यन्धतया दिवाविहारिणा, लम्बोदरतया प्रभूताहारिणा, अनेकशः फलपातनकुपितवानरनखोल्लेखच्छिद्रितनासापुटेन, बहुशः कुसुमावचयचलितभ्रमरसहस्रदंशशीर्णीकृतशरीरेण, सहस्रशः शयनीकृतासंस्कृतशून्यदेवकुलकालसर्पदष्टेन, शतशः श्रीफलतरुशिखरच्युतिचूर्णितोत्तमाङ्गेन, असकृदुत्सन्नदेवमातृगृहवास्यृक्षनखजर्जरितकपोलेन, सर्वदा वसन्तक्रीडिना जनेनोत्क्षिप्तखण्डखट्वारोपि-

१ 'श्रवणादिष्ट' इति **न.** २ 'निबिडीकृत' इति **न.**

तद्वृद्धदासीविवाहप्राप्तविडम्बनेन, अनेकायतनप्रतिशयितनिष्फलोत्थानेन, दौस्थित्यमपि विविधव्याधिपरिवृतं स्वकुटुम्बमिवोद्वहता, मूर्खतामपि बहुव्यसनानुगतां प्रसूतानेकापत्यामिव दर्शयता, क्रोधमप्यनेकदण्डाघातनिर्मितबहुगात्रगण्डकं फलितमिव प्रकाशयता, क्लेशमपि सर्वावयवज्वलितदीपिकादाहव्रणविभावितं बहुमुखमिव प्रकटयता, परिभवमपि निष्कारणाक्रुष्टजनपददत्तपदाकृष्टिशतं सप्रवाहमिव दधानेन, शुष्कवनलताविनिर्मितबृहत्कुसुमकरण्डकेन, वेणुलतारचितपुष्पपातनाङ्कुशिकेन, क्षणमप्यमुक्तकालकम्बलखण्डखोलेन, जरद्द्रविडधार्मिकेणाधिष्ठितां चण्डिकामपश्यत्। तस्यामेव च वासमरचयत्।

अथावतीर्य तुरगात्प्रविश्य भक्तिप्रवणेन चेतसा तां प्रणनाम। कृतप्रदक्षिणश्च पुनः प्रणम्य प्रशान्तोद्देशदर्शनकुतूहलेन परिभ्रमन्नुच्चैरारटन्तमाक्रोशन्तं च कुपितं द्रविडधार्मिकमेकदेशे ददर्श। दृष्ट्वा च कादम्बरीविरहोत्कण्ठोद्वेगदूयमानोपि सुचिरं जहास। न्यवारयच्च तेन सार्धं संरब्धकलहानुपहसतः स्वसैनिकान्। उपसान्त्वनैश्च कथमपि प्रियालापशतानुनयैः प्रशममुपनीय क्रमेण जन्मभूमिं जातिं विद्यां च कलत्रमपत्यानि विभवं वयःप्रमाणं प्रव्रज्यायाश्च कारणं स्वयमेव पप्रच्छ। पृष्टश्चासाववर्णयदात्मानम्। अतीतस्वशौर्यरूपविभववर्णनवाचालेन तेन सुतरामरज्यत राजपुत्रः। विरहातुरहृदयस्य विनोदनतामिवागात्। उपजातपरिचयश्चास्मै ताम्बूलमदापयत्। अस्तमुपगते च भगवति सप्तसप्तौ, आवासितेषु यथासंपन्नपादपतलेषु राजसूनुषु, शाखावसक्ततपनीयपर्याणेषु क्षितितललुठनपांशुलसटावधूननानुमितोत्साहेषु गृहीतकतिपयशष्पकवलेषु पीतोदकेषु स्नानार्द्रपृष्ठतया विगतश्रमेषु पुरोनिखातकुन्तयष्टिषु संयतेषु वाजिषु, वाजिसमीपविरचितपर्णप्रस्तरे च दिवसगमनखिन्नपरिकल्पितयामिके सुषुप्सति सैनिकजने,

१ 'क्रुष्ट०' इति न. २ 'प्रारब्ध०' इति न.

कृतबहुपावकप्रभापीततमसि दिवस इव विराजमाने सेनानिवेशे, चन्द्रापीडः परिजनेनैकदेशे संयतस्येन्द्रायुधस्य पुरः परिकल्पितं प्रतीहारनिवेदितं शयनीयमगात् । निषण्णस्य चास्य तत्क्षणमेव पस्पर्श दुःखासिका हृदयम् । अरतिगृहीतश्च विसर्जयांबभूव राजलोकम् । अतिवल्लभानपि नाललाप पार्श्वस्थान् । निमीलितलोचनो मुहुर्मुहुर्मनसा जगाम किंपुरुषविषयम् । अनन्यचेताः सस्मार हेमकूटस्य । निष्कारणबान्धवतामचिन्तयन्महाश्वेताप्रसादानाम् । जीवितफलमभिललाष पुनः पुनः कादम्बरीदर्शनम् । अपगताभिमानपेशलाय नितरामस्पृहयन्मदलेखापरिचयाय । तमालिकां द्रष्टुमाचकाङ्क्ष । केयूरकागमनमुत्प्रैक्षत । हिमगृहकमपश्यत् । उष्णमायतं पुनरुक्तं निशश्वास । बबन्ध चाधिकां प्रीतिं शेषहारे । पश्चात्स्थितां पुण्यभागिनीममन्यत पत्रलेखाम् । एवं चानुपजातनिद्र एव तामनयन्निशाम् । उषसि चोत्थाय तस्य जरद्द्रविडधार्मिकस्येच्छया निसृष्टैर्धनविसरैः पूरयित्वा मनोरथमभिमतमभिरमणीयेषु प्रदेशेषु निवसन्नल्पैरेवाहोभिरुज्जयिनीमाजगाम ।

आकस्मिकागमनप्रहृष्टसंभ्रान्तानां पौराणामर्घकमलानीव नमस्काराञ्जलिसहस्राणि प्रतीच्छन्नतर्कित एवाविवेश नगरीम् । अहमहमिकया च प्रधावितादतिरभसहर्षरसविह्वलात्परिजनात् 'द्वारि देव चन्द्रापीडो वर्तते' इत्युपलभ्यास्य पिता निर्भरानन्दमन्दगमनो मन्दर इव क्षीरोदजलमुत्तरीयांशुकममलमागलितमाकर्षन्प्रहर्षनेत्रजलबिन्दुवर्षी मुक्ताफलासार इव कल्पपादपः प्रत्यासन्नवर्तिभिर्जरापाण्डुमौलिभिश्चन्दनविलेपनैरनुपहतक्षौमधारिभिः केयूरिभिरुष्णीषिभिः किरीटिभिः शेखरिभिर्बहुकैलासामिव बहुक्षीरोदामिव क्षितिं दर्शयद्भिः प्रतिपन्नासिवेत्रच्छत्रकेतुचामरैरनुगम्यमानो राजसहस्रैश्चरणाभ्यामेव प्रत्युज्जगाम । दृष्ट्वा च पितरं दूरादेवावतीर्य वाजिनश्चूडामणिमरीचिमालिना मौलिना महीमगच्छत् । अथ प्रसारितभुजेनैह्येहीत्याहूय पित्रा सुचिरं गाढमुपगूढः तत्कालसंनिहितानां

च माननीयानां कृतनमस्कारः करे गृहीत्वा विलासवतीभवनमनीयत राज्ञा। तयापि तथैव सर्वान्तःपुरपरिवारया प्रत्युद्गम्याभिनन्दितागमनः कृतागमनमङ्गलाचारो दिग्विजयसंबद्धाभिरेव कथाभिः कंचित्कालं स्थित्वा शुकनासं द्रष्टुमाययौ। तत्राप्यमुनैव क्रमेण सुचिरं स्थित्वा निवेद्य वैशम्पायनं स्कन्धावारवर्तिनं कुशलिनमालोक्य च मनोरमामागत्य विलासवतीभवन एव सर्वाः स्नानादिकाः परवश इव क्रिया निरवर्तयत्। अपराह्णे निजमेव भवनमयासीत्। तत्र च रणरणकखिद्यमानमानसः कादम्बर्या विना न केवलमात्मानं स्वभवनमवन्तीनगरं वा सकलमेव महीमण्डलं शून्यममन्यत। ततो गन्धर्वराजपुत्रीवार्त्ताश्रवणोत्सुकश्च महोत्सवमिवेप्सितवरप्राप्तिकालमिवामृतोत्पत्तिसमयमिव पत्रलेखागमनं प्रत्यपालयत्।

ततः कतिपयदिवसापगमे मेघनादः पत्रलेखामादायागच्छत्। उपानयच्चैनाम्। कृतनमस्कारां च दूरादेव स्मितेन प्रकाशितप्रीतिश्चन्द्रापीडः प्रकृतिवल्लभामपि कादम्बरीसकाशात्प्रसादलब्धापरसौभाग्यामिव वल्लभतरतामुपागतामुत्थायातिशयदर्शितादरमालिलिङ्ग पत्रलेखाम्। मेघनादं च प्रणतं पृष्ठे करकिसलयेन पस्पर्श। समुपविष्टश्चाब्रवीत्। 'पत्रलेखे कथय तत्रभवत्या महाश्वेतायाः समदलेखाया देव्याः कादम्बर्याश्च कुशलम्। कुशली वा सकलस्तमालिकाकेयूरकादिः परिजनः' इति। साब्रवीत्। "देव यथाज्ञापयसि भद्रम्। त्वामर्चयति शेखरीकृताञ्जलिना ससखीजना सपरिजना देवी कादम्बरी"। इत्येवमुक्तवतीं पत्रलेखामादाय मन्दिराभ्यन्तरं विसर्जितराजलोको विवेश। तत्र चोत्ताम्यता मनसा धारयितुमपारयन्कुतूहलमतिप्रीत्या दूरमुत्सारितपरिजनः प्रविश्यागारमचिरप्ररूढायाः स्थलकमलिन्याः पृथुभिरुन्नालैः पलाशैरुपरचितातपत्रकृत्याया अध्यास्य मध्यभागमन्यतरस्य मरकतपताकायमानस्य पत्रमण्डपस्य तले चरणारविन्देन समुत्सार्य सुखप्रसुप्तं हंस-

मिथुनमुपविश्याप्राक्षीत् । 'पत्रलेखे कथय कथमसि स्थिता । कियन्ति वा दिनानि । कीदृशो वा देवीप्रसादः । का वा गोष्ठ्यः समभवन् । कीदृश्यो वा कथाः समजायन्त । को वातिशयेनास्मान्स्मरति । कस्य वा गरीयसी प्रीतिः' । इत्येवं पृष्टा च व्यजिज्ञपत् । "देव दत्तावधानेन श्रूयतां यथा स्थितास्मि यावन्ति वा दिनानि यादृशो वा देवीप्रसादो यथा वा गोष्ठ्यः समभवन्यादृश्यश्च कथाः समजायन्त ।

ततः खल्वागते देवे केयूरकेण सह प्रतिनिवृत्याहं तथैव कुसुमशयनीयसमीपे समुपाविशम् । अतिष्ठं च सुखं नवनवाननुभवन्ती देवीप्रसादान् । किं बहुना । प्रायेण मम चक्षुषि चक्षुर्वपुषि वपुः करे करपल्लवो नामाक्षरेषु वाणी प्रीतौ हृदयं देव्याः सकलमेव तं दिवसमभवत् । अपराह्णे च मामेवावलम्ब्य निष्क्रम्य हिमगृहकात्संचरन्ती यदृच्छया निषिद्धपरिजना वल्लभबालोद्यानं जगाम । तत्र सुधाधवलां कालिन्दीजलतरङ्गमय्येव मरकतसोपानमालया प्रमदवनवेदिकामध्यारोहत् । तस्यां च मणिस्थूणावष्टम्भा स्थिता । स्थित्वा च मुहूर्तमिव हृदयेन सह दीर्घकालमवधार्य किमपि व्याहर्तुमिच्छन्ती निश्चलधृततारकेण निष्पन्दपक्ष्मणा चक्षुषा मुखं मे सुचिरं व्यलोकयत् । विलोकयन्त्येव च कृतसंकल्पा मदनाग्निं प्रवेष्टुमिच्छन्ती सस्नाविव स्वेदाम्भःस्रोतसि । स्वेदाम्भःस्रोतसेव तरलीकृता समकम्पत । कम्पिताङ्गी च पतनभियेवागृह्यत विषादेन ।

अथ मया विदिताभिप्रायया तन्मुखविनिवेशितनिष्कम्पनयनदत्तावधानयाज्ञापयेति विज्ञापिते निजावयवैरपि वेपथुमद्भिर्निवार्यमाणेव, रहस्यश्रवणलज्जयात्मप्रतिमामपि लिखितमणिकुट्टिमेन चरणाङ्गुष्ठेनापक्रमायेवामृशन्ती, भवनकलहंसान्कुट्टिमोल्लेखमुखरितनूपुरेण चरणारविन्देन विसर्जयन्ती, कर्णोत्पलमधुकरानपि स्विद्यद्वदनव्यजनीकृतेनांशुकपल्लवेनोत्सारयन्ती, ताम्बूलवीटिकाशकलमुत्कोचमिव दन्तखण्डितं शिखण्डिने ददती, वनदेवताश्रवण-

शङ्कितेव मुहुर्मुहुरितस्ततो विलोकयन्ती, वक्तुकामापि न शक्नोति स्म किंचिदपि लज्जाकलितगद्गदा गदितुम्। प्रयत्नतोपि चास्या निःशेषं ज्वलता मदनानलेनेव दग्धा, अजस्रं प्रवहता नयनोदकेनेवोढा, प्रविशद्भिर्दुःखैरिवाक्रान्ता, पतद्भिः कुसुमचापशरैरिव शकलीकृता, निष्पतद्भिर्निश्वसितैरिव निर्वासिता, हृदयवर्तिभिश्चिन्ताशतैरिव विधृता, निश्वासपायिभिर्मधुकरकुलैरिव निपीता न प्रावर्तत वाणी। केवलं दुःखसहस्रगणनाय मुक्ताक्षमालिकामिव कल्पयन्ती गलद्भिरस्पृष्टकपोलस्थलैः शुचिभिरधोमुखी नयनजलबिन्दुभिर्दुर्दिनमदर्शयत्। तदा च तस्याः सकाशादशिक्षतेव लज्जापि लज्जालीलां विनयोपि विनयातिशयं मुग्धतापि मुग्धतां वैदग्ध्यमपि वैदग्ध्यं भयमपि भीरुतां विभ्रमोपि विभ्रमितां विषादोपि विषादितां विलासोपि विलासम्। तथाभूता च देवि किमिदमिति विज्ञापिता मया प्रमृज्य लोहितायमानोदरे लोचने दुःखप्रकर्षेणात्मनः समुद्बन्धनायेव मृणालकोमलया बाहुलतया वेदिकाकुसुमपालिकाग्रथितकुसुममालामवलम्ब्य समुन्नतैकभ्रूलता मृत्युमार्गमिवालोकयन्ती दीर्घमुष्णं च निःश्वसितवती। तद्दुःखकारणमुत्प्रेक्षमाणया च कथनाय पुनःपुनरनुबध्यमाना मया व्रीडया नखमुखलिखितकेतकीदला लिखित्वेव वक्तव्यमर्पयन्ती विवक्षास्फुरिताधरा निःश्वासमधुकरानिवोपांशु संदिशन्ती क्षितितलनिहितनिश्चलनयना सुचिरमतिष्ठत्।

क्रमेण च भूयो मन्मुखे निधाय दृष्टिं पुनःपुनरप्यापूर्यमाणलोचनच्युतैर्मदनानलधूमधूसरां वाचमिव क्षालयन्ती बाष्पजलबिन्दुभिर्बाष्पजलबिन्दुव्याजेन च विलक्षस्मितस्फुरितैर्दशनांशुभिः साध्वसविस्मृतानपूर्वानभिधेयवर्णानिव ग्रथ्नती कथमपि व्याहाराभिमुखमात्मानमकरोत्। अब्रवीच्च माम्। ‘पत्रलेखे वल्लभतया तस्मिन्स्थाने न तातो नाम्बा न महाश्वेता न मदलेखा न जीवितं यत्र मे भवती। दर्शनात्प्रभृति प्रियासि। न जाने केनापि

कारणेनापहस्तितसकलसखीजनं त्वयि विश्वसिति मे हृदयम् । कमपरमुपालभे । कस्य वान्यस्य कथयामि परिभवम् । केन वान्येन सह साधारणीकरोमि दुःखम् । दुःखभारमिममसह्यं निवेद्य भवत्यास्त्यक्ष्यामि जीवितम् । जीवितेनैव शपामि ते । स्वहृदयेनापि विदितवृत्तान्तेनामुना जिह्रेमि किमुतापरहृदयेन । कथमिव मादृशी रजनिकरकिरणावदातं कौलीनेन कुलं कलङ्कयिष्यति, कुलक्रमागतां च लज्जां परित्यक्ष्यति, अकन्यकोचिते वा चापले चेतः प्रवर्तयिष्यति । साहं न संकल्पिता पित्रा न दत्ता मात्रा नानुमोदिता गुरुभिर्न किंचित्संदिशामि न किंचित्प्रेषयामि नाकारं दर्शयामि । कातरेवानाथेव बलादवलिप्तेन गुरुगर्हणीयतां नीता कुमारेण चन्द्रापीडेन । कथय महतां किमयमाचारः, किं परिचयस्येदं फलम्, यदेवमभिनवबिसकिसलयतन्तुसुकुमारं मे मनः परिभूयते । अपरिभवनीयो हि कुमारिकाजनो यूनाम् । प्रायेण प्रथमं मदनानलो लज्जां दहति ततो हृदयम् । आदौ विनयादिकं कुसुमेषुशराः खण्डयन्ति पश्चान्मर्माणि । तदामन्त्रये भवतीं पुनर्जन्मान्तरसमागमाय । न हि मे त्वत्तोन्या प्रियतरा । प्राणपरित्यागप्रायश्चित्ताचरणेन प्रक्षालयाम्यात्मनः कलङ्कम्' । इत्यभिधाय तूष्णीमभूत् ।

अहं तु यत्सत्यमविदितवृत्तान्ततया ह्रीतेव भीतेव विलक्षेव विसंज्ञेव सविषादं विज्ञापितवती । 'देवि श्रोतुमिच्छाम्याज्ञापय किं कृतं देवेन चन्द्रापीडेन को वापराधः समजनि केन वा खल्वविनयेन खेदितमखेदनीयं देव्याः कुमुदकोमलं मनः । श्रुत्वा प्रथममुत्सृष्टजीवितायां मयि पश्चात्समुत्स्रक्ष्यसि जीवितम् ।' इत्येवमभिहिता च पुनरवदत् । 'आवेदयामि ते । अवहिता शृणु । स्वप्नेषु प्रतिदिवसमागत्यागत्य मे रहस्यसंदेशेषु निपुणधूर्तः पञ्जरशुकसारिका दूतीः करोति । सुप्तायाः श्रवणदन्तपत्रोदरेषु व्यर्थमनोरथमोहितमानसः संकेतस्थानानि लिखति । स्वेदप्रक्षा-

लिताक्षरानपि निपतितसाञ्जनाश्रुबिन्दुपङ्क्तिकथितात्मावस्थानान्मनोहरान्संमोहाशानुवर्तिनो मदनलेखान्प्रेषयति । निजानुरागेण बलादरञ्जयदलक्तकरसेनेव चरणौ । अविनयनिश्चेतनो नखप्रतिबिम्बितमात्मानं बहु मन्यते । उपवनेष्वेकाकिन्या ग्रहणभयपलायमानायाः पल्लवलग्नांशुकदशाप्रतिहतगमनाया गृहीत्वेव सखीभिरर्पिताया मिथ्याप्रगल्भः पराङ्मुखायाः परिष्वङ्गमाचरति । स्तनस्थले मे लिखन्पत्रलतां कुटिलतामिवानृजुप्रकृतिः प्रकृतिमुग्धं मनः शिक्षयति । हृदयोत्कलिकातरङ्गवातैरिव शीतलैर्मुखमरुद्भिः श्रमजलसीकरतारकितावलीकचाटुकारः कपोलौ वीजयति । स्वेदसलिलशिथिलितग्रहणगलितोत्पलशून्येनापि करेण यवाङ्कुरानिव नखकिरणाञ्छुद्धान्दुर्विदग्धः कर्णपूरीकरोति । वल्लभतरबालबकुलसेककालकवलीकृतान्सुरागण्डूषान्सकचग्रहमसकृद्धृष्टो मां पाययति । भवनाशोकताडनोद्यतान्पादप्रहारान्दुर्बुद्धिविडम्बितः शिरसा प्रतीच्छति । मन्मथमूढमानसश्च कथय हे पत्रलेखे केन प्रकारेण निश्चेतनो निषिध्यते । प्रत्याख्यानमपीर्ष्यां संभावयति । आक्रोशमपि परिहासमाकलयति । असंभाषणमपि मानं मन्यते । दोषसंकीर्तनमपि स्मरणोपायमवगच्छति । अवज्ञानमप्यनियन्त्रणं प्रणयमुत्प्रेक्षते । लोकापवादमपि यशो गणयतीति ।

तामेवंवादिनीमाकर्ण्य प्रहर्षरसनिर्भरा मनस्यकरवम् । 'अहो चन्द्रापीडमुद्दिश्य सुदूरमाकृष्टा खल्वियं मकरकेतुना । यदि च सत्यमेव कादम्बरीव्याजेन साक्षान्मनोभवचित्तवृत्तिः प्रसन्ना देवस्य, ततः सहजैः सादरं संवर्धितैः प्रत्युपकृतमस्य गुणैः, यशसा धवलिताः ककुभः, यौवनेन रतिरससागरतरंगैः पातिता रत्नवृष्टिः, यौवनविलासैर्लिखितं नाम शशिनि, सौभाग्येन प्रकाशिता निजश्रीः, लावण्येनैन्दवीभिरिव वृष्टममृतं कलाभिः । तथा च चिराल्लब्धः कालो मलयानिलेन समासादितोवसरश्चन्द्रोदयेन प्राप्तमनुरूपं फलं मधुमासकुसुमसमृद्ध्या गतो मदिरारसदोषो गुणतां

दर्शितं मुखं मन्मथयुगावतारेण' इति । अथाहं प्रकाशं विहस्याब्रवम् । 'देवि यद्येवमुत्सृज कोपं प्रसीद । नार्हसि कामापराधैर्देवं दूषयितुम् । एतानि खलु कुसुमचापस्य चापलानि शठस्य न देवस्य' । इत्येवमुक्तवतीं मां पुनः सकुतूहला सा प्रत्यभाषत । 'योयं कामः कोपि वा कथय कानि कान्यस्य रूपाणि' इति । तामहं व्यजिज्ञपम् । 'देवि कुतोस्य रूपम् । अतनुरेष हुताशनः । तथा हि । अप्रकाशयञ्ज्वालावलीः संतापं जनयति । अप्रकटयन्धूमपटलमश्रु पातयति । अदर्शयन्भस्मरजोनिकरं पाण्डुतामाविर्भावयति । न च तद्भूतमेतावति त्रिभुवनेस्य शरशरव्यतां यन्न यातं याति यास्यति वा । गृहीतकुसुमकार्मुको बाणैर्बलवन्तमपि विध्यति । अपि चानेनाधिष्ठितानां कामिनीनां पश्यन्तीनां चिन्ताप्रियमुखचन्द्रसहस्राणि संकटमम्बरतलम्, लिखन्तीनां दयिताकारानविस्तीर्णं महीमण्डलम्, गणयन्तीनां वल्लभगुणानल्पीयसी संख्या, शृण्वतीनां प्रियतमकथामबहुभाषिणी सरस्वती, ध्यायन्तीनां प्राणसमसमागमसुखानि ह्रसीयान्कालो हृदयस्यापतति' इति ।

एतदाकर्ण्य च क्षणं विचिन्त्य प्रत्यवादीत् । 'पत्रलेखे यथा कथयसि तथा जनोयं कारितः कुमारे पक्षपातं पञ्चेषुणा । यान्यस्यैतानि रूपाणि समधिकानि वा तानि मयि वर्तन्ते । हृदयादव्यतिरिक्तासीदानीं भवतीमेव पृच्छामि । उपदिश त्वं यदत्र मे सांप्रतम् । एवंविधानां वृत्तान्तानामनभिज्ञास्मि । अपि च मे गुरुजनवक्तव्यतां नीताया नितरां लज्जिताया जीवितान्मरणमेव श्रेयः पश्यति हृदयम्' । इत्येवंवादिनीं भूयस्तामहमेवमवोचम् । 'अलमलमिदानीं देवि किमनेनाकारणमरणानुबन्धेन । अनाराधितप्रसन्नेन कुसुमशरेण भगवता ते वरो दत्तः । का चात्र गुरुजनवक्तव्यता यदा खलु कन्यकां गुरुरिव पञ्चशरः संकल्पयति

१ 'को वाऽस्मान्न त्रसति' इत्यस्मात्परमधिकं क–न–पुस्तकयोः.

मातेवानुमोदते पितेव ददाति सखीवोत्कण्ठां जनयति धात्रीव तरुणतायां रत्युपचारं शिक्षयति। किमिव कथयामि ते याः स्वयं वृतवत्यः पतीन्। यदि च नैवमनर्थक एव तर्हि धर्मशास्त्रोपदिष्टः स्वयंवरविधिः। तत्प्रसीद देवि। अलममुना मरणानुबन्धेन शपे ते पादपङ्कजस्पर्शेन। संदिश प्रेषय माम्। याम्यानयामि देवि ते हृदयदयितम्'। इत्येवमुक्ते मया प्रीतिद्रवार्द्रया दृष्ट्या पिबन्तीव मां निरुध्यमानैरपि मकरकेतुशरजर्जरितां भित्त्वेव लज्जां लब्धान्तरैर्निपतद्भिरनुरागविभ्रमैराकुलीक्रियमाणा प्रियवचनश्रवणप्रीत्या च स्वेदाश्लिष्टमुत्क्षिप्य रोमाञ्चजालकेन दधतीवोत्तरीयांशुकं प्रेङ्खत्कुण्डलमाणिक्यपत्रमकरकोटिलग्नं च शशिकिरणमयं मरणपाशमिव मकरकेतुना निहितं कण्ठे हारमुन्मोचयन्ती प्रहर्षविह्वलान्तःकरणापि कन्यकाजनसहजां लज्जामिवावलम्ब्य शनैरवदत्।

'जानामि ते गरीयसीं प्रीतिम्। केवलमकठोरशिरीषपुष्पमृदुप्रकृतेः कुतः प्रागल्भ्यमेतावन्नारीजनस्य विशेषतो बालभावभाजः कुमारीलोकस्य। साहसकारिण्यस्ता याः स्वयं संदिशन्ति समुपसर्पन्ति वा। स्वयं साहसं संदिशन्ती बाला जिह्रेमि। किं वा संदिशामि। अतिप्रियोसीति पौनरुक्त्यम्, तवाहं प्रियात्मेति जडप्रश्नः, त्वयि गरीयाननुराग इति वेश्यालापः, त्वया विना न जीवामीत्यनुभवविरोधः, परिभवति मामनङ्ग इत्यात्मदोषोपालम्भः, मनोभवेनाहं भवते दत्तेत्युपसर्पणोपायः, बलाद्धृतोसि मयेति बन्धकीधार्ष्ट्यम्, अवश्यमागन्तव्यमिति सौभाग्यगर्वः, स्वयमागच्छामीति स्त्रीचापलम्, अनन्यरक्तोयं परिजन इति स्वभक्तिनिवेदनलाघवम्, प्रत्याख्यानशङ्कया न संदिशामीत्यप्रबुद्धबोधनम्, अनपेक्षितानुजीवितदुःखदारुणा स्यामित्यतिप्रणयिता, ज्ञास्यसि मरणेन प्रीतिमित्यसंभाव्यमेव' इति।

## LIST OF SOME IMPORTANT ABBREVIATIONS EMPLOYED IN THE NOTES.

अ०—अध्याय.

अमरः—The कोश of अमरसिंह.

क—Mr. Kale's edition of the Kādambarī.

का० सू०—काव्यालंकारसूत्र of वामन.

किरात—किरातार्जुनीय of भारवि.

कुमार०—कुमारसंभव of कालिदास.

न—The Nirṇayasāgara edition of the Kādambarī.

प—Dr. Peterson's edition of the Kādambarī.

पा०—The अष्टाध्यायी of पाणिनि.

मनु०—मनुस्मृति ( निर्णयसागर ed. ).

पु०—पुराण

याज्ञवल्क्य—याज्ञवल्क्यस्मृति.

रघु०—रघुवंश of कालिदास.

वाग्भटालं०—वाग्भटालंकार.

विष्णुपु०—विष्णुपुराण.

वेणीसं०—वेणीसंहार of भट्टनारायण.

शा०—अभिज्ञानशाकुन्तल of कालिदास.

शान्ति०—शान्तिपर्व.

सि. कौ.—सिद्धान्तकौमुदी of भट्टोजिदीक्षित.

Com.—Commentary ; commentator.

K.—Mr. Kale's edition of the Kādambarî.

N.—The Nirṇayasāgara edition of the Kādambarî.

P.—Dr. Peterson's edition of the Kādambarî.

---

# NOTES.



Chandrāpīḍa, while pursuing a pair of Kinnaras, missed his way. Being unable to overtake them, he gave up the pursuit and thought of returning. After riding a short distance, he comes across the lake called Achchhôda.

P. 1 ll. 1–5. आलोकमात्रेणैव by the mere sight (of the lake). अपगतश्रमः—अपगतः श्रमः यस्य whose fatigue disappeared. मनसि अकरोत् thought. The subject of अकरोत् is चंद्रापीड. तुरग…नुसरणम्—तुरगस्य इव मुखं यस्य सः तुरगमुखः किन्नरः तयोः मिथुनं (couple) तस्य अनुसरणम् (pursuit). आलोकयतः qualifies मे. एतत् qualifies सरः which is the object of आलोकयतः. ईक्षणयुगलस्य नेत्रद्वयस्य. परिसमाप्तं द्रष्ट…फलम् (द्रष्टव्यस्य दर्शनं तदेव फलम्)—The fruit *i. e.* the purpose, be-all and end-all in the case of the two eyes, *viz.* seeing what is worthy of being seen, has been completely accomplished. The purpose for which man is endowed with eyes is to see what is worth seeing. रमणीयानामन्तः—the furthest limit of things beautiful *i.e.* the most beautiful thing. आह्लादनीयानाम् of delightful things. अवधिः=सीमा the highest limit. सीमान्तलेखा (सीम्नः अन्तः तस्य लेखा) Lit. the line of the furthest point of the boundary *i. e.* the utmost limit. प्रीतिजननानां of things that cause pleasure. परिसमाप्तिः=अन्तः Highest pitch. अवसानम्=अन्तः. What the author means is that the lake is the most beautiful thing in the world, the object the most worthy of being seen par excellence.

P. 1 ll. 6–10. इदं qualifies सरःसलिलम्, which is the object of उत्पाद्य. वेधसा=ब्रह्मणा. पुनरुक्त…स्वसृष्टिः (Brahmâ) has rendered his own creation as it were superfluous (by producing nectar after he had created the lake). The lake is quite sufficient for all the purposes for which अमृत is required and so there was no necessity for creating the latter. इदमपि…समर्थम् these words constitute the reason of the assertion made in the preceding sentence. अतिविमल…आह्लादयति—In these five sentences the author illustrates how the lake causes pleasurable sensations to the five ज्ञानेन्द्रियs (श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी). प्रीतिम् pleasure. उपाहरति brings, causes. कमलसुगन्धितया (शोभनः गन्धः यस्य तत् सुगन्धि कमलैः सुगन्धि तस्य भावः कमल…न्धिता तया)—On account of its emit-

ting the perfume of the lotuses. घ्राणम् the nose. आप्याययति (causal of प्यै 1. A. with आ) gratifies. हंसमुखरतया on account of its resounding (मुखर) with the cackling of geese. श्रुतिम् the ear. रसनाम् the tongue.

P. **1** ll. **11–18.** नियतम् certainly. अस्यैव of this very (lake). उमापतिः शिवः. कैलासनिवासव्यसनम्—his fondness for dwelling on the mountain कैलास. The fact that S'iva always dwells on कैलास is here represented as due to the former's eagerness for seeing the beautiful lake near कैलास. सांप्रतम् (an *adj.* of दोहदम्) proper; or an adverb 'properly'. The meaning is:—'it is not proper that विष्णु has a longing for lying on the water (of the sea, as he does at present). The sentence यत् &c. gives the reason for this assertion. If we explain by saying that 'he has no particular longing for lying on water', that explanation would be opposed to the spirit of the next sentence, containing the words अपहाय and स्वपिति (in the present tense). In the sentence यत्....स्वपिति, it is said that विष्णु does lie upon water and in the sentence न सांप्रतं &c., we think, this longing of his is declared to be improper, now that he has got such a vast lake of fresh water to lie upon. जलशयन-दोहदम् (दोहदः-दम् longing, generally of a pregnant woman) his longing for lying on the waters (of the ocean). रथाङ्गपाणिः (रथाङ्गं चक्रं पाणौ यस्य) विष्णुः. Vishṇu is described as lying on the sea during the four months of the rainy season. Compare मेघदूत 'शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ'; our author himself says elsewhere (p. 40, Peterson's edi.) 'जलधरसमयमिव वनगहनमध्यसुखसुप्तहरिम्.' As the present (स्वपिति) is used, it seems to us wrong to refer to विष्णु's lying in the sea at the end of a युग. यदिद....स्वपिति. यत् means 'since'. अमृतरस इव सुरभि सलिलं यस्य this qualifies इदं (सरः), which is the object of अपहाय. The idea is that if Vishṇu at all wants to sleep on waters he should rather do so on the fresh and pleasant waters of a big lake than on those of the salt sea. लवणरसेन परुषं (disagreeable) पयः यस्य तस्मिन् उदन्वति सागरे 'उदन्वान् उदधौ च' पा० 4. 2. 13. 'जयति स भगवान्कृष्णः शेते यः शेषभोगशय्यायाम्। मध्येपयः पयोधेरपर इवांभोनिधिः कृष्णः॥' वेणीसं०. प्रथमम् Formerly, in by-gone ages. येन on account of which, so that. प्रलये कल्पान्ते यः वराहः (विष्णोरवतारः) तस्य घोणा नासिका तया अभिघातः प्रहारः पृथिव्या उद्धरणार्थं तस्माद्भीता. Being frightened by the stroke of the nose (*i. e.* the snout) of the great Boar at the time of universal destruction. भूतधात्री the supporter of all beings *i. e.* the earth. कलश...सलिलं-कलशयोनिः अगस्त्यः तेन पानाय परिकलितं (thought) सकलं सलिलं यस्य–is an *adj.* of सागरम् and means 'all the waters of which were meant

for his mouthful (lit. for drinking) by the sage Agastya.' It is said that Agastya in order to help Indra drank off the sea, because the demons named Kāleyas hid themselves in the sea during the day and stalked abroad at night. सागरमवतीर्णा entered into the ocean. The demon हिरण्याक्ष, on the strength of a boon from Brahmâ, became insolent and carried the earth into the sea; Vishṇu assuming the form of a Boar (3rd incarnation) brought it up. Compare गीतगोविन्द 'वसति दशनशिखरे धरणी तव लग्ना । शशिनि कलङ्ककलेव निमग्ना ॥ केशव धृतशूकररूप जय जगदीश हरे ॥' The earth was really taken into the sea by हिरण्याक्ष. प्रलय...भीता does not really constitute the reason why it entered the sea. The earth which was really taken into the sea by हिरण्याक्ष is represented as entering it through fear of the stroke of the tooth of the Boar when he brought it up. Perhaps Bâṇa had before him some story referring to the fact that the earth went into the sea through fear of the Varâha. There is a great significance in the employment of the word कलशयोनि; if one born of a mere घट drank the sea, it must be very small indeed. अन्यथा otherwise (*i. e.* if the vast lake had existed formerly, the earth would have been sunk into it rather than into the comparatively small ocean drunk by one sprung from a pot). अगाध... म्भसि whose waters are as deep as many Pâtalas. (अगाधानि अनेकपातालानि तद्वत् गंभीराणि अंभांसि यस्मिन्) qualifies महासरसि. Seven पाताल्s are mentioned, अतल, वितल, सुतल, तलातल, रसातल, महातल and पाताल. किमे...भवेत् (if the earth had been plunged into the great lake) what of one, it would not have been reached (आसादिता obtained) by even thousands of big boars.

P. 1 ll. 19–2. सलिललेशम् a little water. आदाय आदाय having frequently taken up (नित्यवीप्सयोः । पा. 8. 1. 4 आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्विर्वचनं स्यात्). प्रलयपयोदाः clouds at the time of universal destruction. It is believed that at the time of प्रलय vast clouds called पुष्कर and आवर्तक cover the sky. Compare वेणीसं॰ 'महाप्रलयमारुतक्षुभितपुष्करावर्तक॰.' प्रलय...दिशः (प्रलये दुर्दिनं 'मेघच्छन्नेऽह्नि दुर्दिनम्' तेन अन्धकारिताः दश दिशः यैः) qualifies पयोदाः and means 'who had darkened the ten quarters by the cloudy day at the time of Pralaya'. प्लावयन्ति flood. सृष्टेः अर्वाक् before the creation of the world. यत् qualifies भुवनम्. सलिल...मभूत् the universe which at first was full of water and in the form of the egg of Brahman. ब्रह्माण्डम् the primordial egg from which the universe sprang. It was believed that before the creation of different objects, there was water alone; Cf. सर्वं सलिलमेवासीत् पृथिवी तत्र निर्मिता । अयोध्याकाण्ड 110.3. As regards the egg, see मार्कण्डेय पु॰ 101. 21–23. 'निष्प्रभेऽस्मिन्निरालोके

सर्वत्र तमसावृते । बृहदण्डमभूदेकमक्षरं कारणं परम् ॥ तद्बिभेद तदन्तःस्थो भगवान्प्रपितामहः ।'. पिण्डीभूय forming into a mass *i. e.* contracting itself in size. सरो...स्थितम्—has remained in the guise of a lake. The idea is that the universe, which at first was nothing but a mass of water, formed itself into a compact mass, *viz.* the lake.

P. 2 ll. **1–8.** इति...ततार. विचारयन् qualifies चन्द्रापीड (understood), the subject of अवततार. तस्य (of the lake) goes with दक्षिणं तीरं which is the object of आसाद्य (having reached). All the remaining compounds qualify तीरम्. शिला...प्रायम् which was full of sand, that was as rough as the pieces of stones. विद्या...लिङ्गम्—विद्याधरैः देवयोनिविशेषैः उद्धृतानि आदत्तानि सनालानि नालसहितानि कुमुदानि तेषां कलापः समूहः तेन अर्चितानि पूजितानि अनेकानि चारूणि मनोहराणि सैकतानि सिकतामयानि लिङ्गानि यस्मिन्—On which many and charming Lingas (of S'iva) made of sand were worshipped with a number of Kumuda (white moonlotuses) flowers along with their stems, (flowers) that were plucked by Vidyâdharas (semi-divine beings). सैकत is an *adj.* from सिकता according to 'सिकताशर्कराभ्यां च' पा० V. 2. 104. This is a reference to लिंगपूजा. अरुन्धती...शोभितम्—decked by the red lotuses thrown upon it (पर्यस्त scattered) when Arundhatî (the wife of Vasishṭha) offered the respectful offering of water (अर्घ्यपयः) to the sun. अर्घ्य–अर्घः पूजाविधिः तदर्थं द्रव्यं अर्घ्यम्. पयसः पर्यस्तानि. उप...तपम् on which the sunshine (आतप) was enjoyed by mermaids (rather 'mermen') sitting upon stones lying near the bank (उपकूल). अभ्यर्णतया कैलासस्य on account of the nearness of कैलास (to the lake अच्छोद). This constitutes the reason why the मातृs came there to bathe. मातृ (*plu.*) the divine mothers, said to attend on S'iva; they are seven or 8 according to others (ब्राह्मी माहेश्वरी चैन्द्री वाराही वैष्णवी तथा । कौबेरीत्यपि कौमारी सप्तैव मातरः स्मृताः ॥ हलायुधः). अवकीर्ण...द्धूलनम्—अवकीर्णं (scattered about) यद्भस्म तेन सूचितं आदौ (स्नानार्थं) मग्नं पश्चात् (जलात्) उत्थितं गणानां शिवानुचराणां वृन्दं समूहः तस्य (त्रिपुण्ड्रसमये भसनः) उद्धूलनं यस्मिन्—the ashes scattered about on which indicate the sprinkling (of the forehead) with ashes (at the time of making the त्रिपुण्ड्र mark) on the part of the attendants of S'iva (गण), who first plunged into the lake and then came out. अवगाहा...सिक्तम्—sprinkled with the discharge (प्रस्रवण) of rut dropped down from the temples of Gaṇapati who entered it (lake) for a bath (अवगाह). It should be remembered that Gaṇapati has the head of an elephant and hence the rut, spoken of above. अतिप्रमाण....मार्गम्—from the very big foot-prints on which, was to be inferred (अनुमीयमान) the path by which the thirsty lion of

Pârvatî entered ( the lake ). This lion is the वाहन of कात्यायनी. 'उमा कात्यायनी गौरी ' इत्यमरः.

P. 2 ll. 9-14. व्यपनीतपर्याणम्—( व्यपनीतं दूरीकृतं पर्याणं यस्य ) whose saddle is removed. इन्द्रायुध is the name of the horse of चंद्रापीड. क्षिति...स्थितं and गृहीत... ग्रासं qualify इन्द्रायुधम् ( understood ) which is the object of अवतार्य. क्षितितले आदौ लुठितम् पश्चाद् उत्थितम् who first rolled on the ground and then stood up. गृहीत... ग्रासम् who took a few ( कतिपय ) mouthfuls of grass ( यवस *n.* ). सरोऽवतार्य having led to the lake ( अवतार्य Indeclinable *p. p.* of the caus. of तॄ with अव ). पीतसलिलं इच्छया स्नातं च उत्थाप्य having brought it out ( of the water ) when it drank water and bathed at its pleasure. मूलशाखायां चरणे बद्ध्वा having tied it by its foot to the principal branch ( of a tree ). अपगतखलीनम्—whose bridle was removed. खलीनः-नम् ( खे मुखबिले लीनः ). The reading चरणौ बद्ध्वा is not good, as in that case बद्ध्वा will govern two objects, अपगतखलीनं and चरणौ which cannot be so construed as to yield a good sense. We therefore prefer the reading of the Calcutta editions. कनकमय्या हस्तपाशशृंखलया—by the golden chain made of the band he carried in his hand ( as the reins, it seems ). कृपाणिकावलूनान् qualifies कवलान्, which is the object of क्षिप्त्वा. कृपा...लूनान् cut off by a dagger or knife. सरस्तीर... कवलान् mouthfuls of the shoots ( प्रवालः-लम् ) of Dūrva grass growing on the bank of the lake. Having looked after his horse he thought of himself.

P. 2 ll. 14-18. चातक......माहारम्—having partaken of a meal consisting of water like the Châtaka bird. The Châtaka is supposed to subsist only on the few rain drops that fall into its mouth. Cf. भर्तृहरि 'सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः'. चक्राह्वः इव like the चक्रवाक bird. मृणालशकलानि pieces of lotus-fibres. शिशिरांशुः ( शिशिराः अंशवः किरणाः यस्य ) the moon. कराग्रैः by the tips of his fingers ( with reference to चन्द्रापीड ); by the ends of rays ( in the case of the moon ). The moon touches the Kumuda lotuses by her rays and causes them to bloom. फणी इव like a serpent. जलतरंगवातान् the breezes wafted from the ripples of the lake. अभिनन्द्य having hailed with joy. It is supposed that serpents subsist upon the wind; Cf. भर्तृहरि—'हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं व्यालानां पशवस्तृणांकुरभुजः सृष्टाः स्थलीशायिनः'. One of the synonyms for सर्प is पवनाशन. 'उरगः पन्नगो भोगी जिह्मगः पवनाशनः' अनङ्ग-तुरः इव like one suffering from the strokes of the arrows of cupid ( अनङ्ग ). नलिनी—... रीयम् ( having placed on the chest ) the upper garment in the form of the leaf of a lotus plant ( नलिनीदलमेव उत्तरीयम् ). सीकरा...

करः—सीकरेण आर्द्रं पुष्करं (कमलं शुण्डाग्रं च) तेन उपशोभितः करः (हस्तः शुण्डा च) यस्य whose hand was adorned by the lotus wet with the spray (with reference to चन्द्रापीड); or whose trunk was adorned by a tip that was wet with the spray (with reference to the wild elephant). उदगात् went out (Aorist).

P. 2 ll. 18–26. प्रत्यग्र…शुश्राव. प्रत्यग्रभग्नानि च तानि शिशिराणि च which were cool because they were plucked very recently. समृणालकैः along with the fibres. जलकणिकाचितैः covered (आचित) with drops of water. पलाशम् a leaf. लता…क्षिप्ते—surrounded by a bower of creepers. स्रस्तरमास्तीर्य having spread a bed (स्रस्तरः). चन्द्रापीड spread flowers upon the stone to lie down upon. निधाय…त्तरीयम् having placed below his head (as a pillow) his upper garment rolled into a heap. समुच्चरन्तं (proceeding, rising from) qualifies गीतशब्दं the object of अशृणोत्. उन्मुक्तकवलेन who left off the mouthful (of grass it was eating). निश्चल…टेन—whose ears were motionless (निश्चलं श्रवणपुटं यस्य). तन्मु…तेन which turned its face in that direction (from which the sound came). उद्ग्रीवेण (उद्गता ग्रीवा यस्य) that raised its neck. श्रुतिसुभगम् agreeable to the ear. वीणा…मिश्रम् blended with the sound of the strings (तन्त्री) of a lute. झंकारः is an onomatopoetic word. अमानुषम् not human, superhuman. वि…संपाते (विगतः मर्त्यानां संपातः यस्मिन्) in which no human being can go. संभूतिः possibility. समु…कौतुकः in whom a curiosity was produced. गीत… प्राहिणोत् he cast his eye in the direction indicated by the production of the music. अतिदवीयस्तया on account of the great distance (दवीयस् is the comparative of दूर). प्रयत्न…चनोऽपि (प्रयत्नेन व्यापृते लोचने यस्य सः चन्द्रापीडः) although he exerted his eyes. अनवरतम् ceaseless.

P. 3 ll. 4–9. (कुतूहल…अभिप्रतस्थे). गीत…ज्ञासया from the desire of knowing the source of the music. कृतबुद्धिः-कृता गमने बुद्धिर्येन—who made up his mind to go. दत्तपर्याणम् saddled. प्रियगीतैः—प्रियं गीतं येषां to whom music is dear. प्रथम…वर्त्मा (Chandrâpîḍa) who was instructed as regards the road by wild deer that had started before him (in the direction of the music), although they were not requested by him (to do so). पश्चिमया सरस्तीरवनलेखया अभिप्रतस्थे he started along the grove lying to the western side of the bank of the lake. सप्तच्छद…परिमलया, अलि…रितया and तमालनीलया are *adj.* of वनलेखया. सप्तच्छदः (having seven leaves, Marathi सातवीण). एला cardamom. लवली a kind of creeper. लवलीलतानां लोलानि चञ्चलानि कुसुमानि तेषां सुरभिः परिमलः यस्यां सा वनलेखा. अलि…रितया which resounded (मुखरित) with the hum (विरुति) of swarms

of bees. तमालः a tree which has dark leaves. दिङ्नागमदवीथ्या इव as if along the line of rut proceeding from (the temples of) the elephants of the quarters. There was a belief that there were 8 guardian elephants such as ऐरावत &c. of the 8 quarters. The rut issuing from the temples of elephants is dark. Hence the वनलेखा dark with तमाल trees is compared with the line of rut. संगीतध्वनिं निमित्तीकृत्य lit. Making the music his mark *i. e.* towards the music.

P. 3 ll. **10–15.** (क्रमेण....नन्द्यमानः). All the instrumentals in these lines qualify कैलासमारुतैः in l. 15. संमुखागतैः that blew on his face. अच्छ...जडिमभिः (अच्छ...जालेन जनितः जडिमा येषाम्) which were made cold by the number of particles of water (taken) from pure springs. जर्ज...वल्कलैः that shattered (loosened) the bark of birch trees. वृषः bull. रोमन्थः (रोगं मथ्नातीति) ruminating, chewing the cud. As the winds proceeded from कैलास on which शिव resides, they naturally carry particles of the foam issuing from the mouth of S'iva's bull. षण्मुख...चुम्बिभिः kissing (licking) the crest of the peacock of Kârtikeya (who has six faces and rides a peacock). अम्बिका...दुर्ललितैः that possesses the rudeness (दुर्ललितं) of causing the tender sprouts worn by Pârvatî as an ear-ornament (कर्णपूरः) to dance. उत्तर...दोहदिभिः that long for swinging (प्रेङ्खोलनं) the blue lotuses placed on their ears by the damsels of Uttara-kuru (it is said to be a country of eternal bliss). आकम्पितकक्कोलैः that shook the Kakkôla trees. The other reading (of P 3rd edition) आ...कल्लोलैः (which shook the billows) makes no sense and is rather inappropriate in the description of कैलासमारुत. नमेरुः a kind of tree. पांशुः pollen. पशु...शेषैः—पशुपतेः शिवस्य जटा तस्याः बन्धः तेन आर्तः पीडितः वासुकिः नागराजः तेन परिपीताः तेभ्यः शेषाः अवशिष्टाः (winds) that remained after Vâsuki, who was distressed by being used in tying the matted hair of S'iva, had taken his fill. शिव has serpents as his ornaments and he may be represented as tying his hair with one of them.

P. 3 l. **15**–p. **4** l. **26.** (गत्वा च...अपश्यत्). The principal sentence in this long passage is क्रमेण कैलासमारुतैरभिनन्द्यमानः (p. 3 l. 15) (चन्द्रापीडः) गत्वा च तं प्रदेशं...पादपैः परिवृतं (p. 4 l. 22)...शूलपाणेः शून्यं सिद्धायतनमपश्यत् (p. 4 l. 25). All the instrumentals from मरकतहरितैः (p. 3 l. 16) to दृष्टिहारिभिः (p. 4 l. 22) qualify पादपैः. मर...रितैः that were as green as emerald. हारि...रमणीयैः charming on account of the cooing of attractive Hârîta (a kind of pigeon) birds. भ्रम...कुड्मलैः—the hard (जरठ) buds (कुड्मल) of which are loosened by the nails of wandering भृङ्गराज (birds). उन्मद intoxi-cated. सहकारः Mango-tree. कवलीकृत devoured. उन्मद...कलिकैः the

distinctly manifest (विकच) mangoblossoms (चूतकलिका) in which are resounding with (the hum of) the swarms (चक्रवालं) of intoxicated bees. अचकित...ङ्कुरैः the shoots of मरिच plants in which are kissed by चकोर (Greek partridge) birds that are not frightened. A चकोर is said to detect poison. See कामन्दकीयनीतिसार 'चकोरस्य विरज्येते नयने विषदर्शनात् । सुव्यक्तं माद्यति क्रौञ्चो म्रियते कोकिलः किल ॥' VII. 12. What the author means seems to be this—As the चकोर birds are not frightened, there is no danger of any poisonous plant of any kind, since at the approach of poison, their eyes change colour. Mr. Kale reads चकित for अचकित. It is hard to say what the propriety of the word is. चम्पक...फलैः the long pepper (Marathi पिंपळी) fruits in which are eaten (जग्ध p. p. parti. of अद्) by कपिञ्जल birds rendered tawny by heaps of the pollen of champaka flowers. फल...कलविङ्कैः on which sparrows are born in the nests (नीड) on thickly growing (निबिड) pomegranate trees that groan under (निपीडित) the massive weight of their fruits. It would have been better, if we could have read फलनिकरभर &c. निकरः collection. प्रक्रीडित...ताडीपुटैः in which the rows of palm fruits are set in motion (तरलित) by being beaten with the palms of the hands of restless (चपल) and frolicsome (प्रक्रीडित) monkeys. अन्योन्य ...कुसुमैः the flowers of which are made to fall down by the edges (पाली) of the wings of pigeons angered by mutual quarrels. कुसुम ...शिखरैः the tops of which are resorted to by Sârikâs (birds) spotted with (सार) the mass of the pollen of flowers. शकलित torn to pieces. स्फीत abounding in. जलधर...खण्डैः the groves of Tamāla trees in which resound with the chirping (ध्वान) of simple Chātaka birds that, coveting the water of the clouds, are deceived (विप्रलब्ध). The grove of the dark Tamāla trees is looked upon as a dark cloud by the foolish châtakas and when they fly towards it they do not get water and are thus deceived. इभ...वलयैः— इभानां हस्तिनां कलभकैः उल्लूनाः खण्डिताः पल्लवाः येषां तानि इभ...पल्लवानि वेल्लितानि आन्दोलितानि लवलीवलयानि येषु—In which the coils (वलय) of Lavali creepers are swinging to and fro, as their sprouts are cut down by the young ones (कलभक) of elephants. आलीय...स्तवकैः The bunches of flowers on which are scattered (पर्यस्त) by the movements (क्षेप) of the wings of Pârâvata birds that hide themselves (आलीयमान present P.) on the trees and are intoxicated by fresh youth. तनु...वीजितैः fanned by the tender leaves of plantain trees that shake even by a slight (तनु) breeze. अविरल...वनैः in which cocoa-nut groves are bent down (अवनत) by the masses (निकर) of thickly growing fruits. अकठोर...परिवृतैः—

अकठोराणि मृदूनि पत्रपुटानि येषां ते अकठोरपत्रपुटाः, अकठोर...पुटाश्च ते पूगविटपिनः पूगवृक्षाः तैः परिवृताः तैः—surrounded by betel-nut trees whose leaves are not hard. अनिवा...जालकैः in which numbers of fruits of date-palm trees (पिण्डखर्जूर) are pierced by the beaks of birds that are restrained by no one (अनिवारित). मद... तान्तरैः the spaces (अन्तर) between which are made to resound (विरावित) by the sweet tones (रव) of peahens that become noisy (मुखर) through intoxication. अकः... दन्तुरैः bristling with the masses of buds that are not plucked (by any one). अकलित may also mean 'countless.' The reading आकलित (of K and N) is not so good as अकलित. आकलित means 'produced'. अन्तरान्तरा (Ind.) at intervals, here and there. कैलास...भागैः–कैलासतरंगिणीभिः तरङ्गितः अत एव सिकतिलः तलभूमिभागः येषां तैः the surface of the ground at the root of which is sandy (सिकतिल) being watered (तरंगित) by the streams (तरंगिणी) issuing from Kailāsa. सिकतिल is formed according to 'देशे लुबिलचौ च' पा० V. 2. 105. and means (सिकताः सन्ति अस्मिन्देशे). वन...निभम् (*adj.* of किसलयनिकरम्) resembling the collection (निवह) of the palms of the hands of sylvan deities. It was supposed that forests were presided over by certain guardian deities. अलक्तक...सिक्तमिव as if it were sprinkled with a few drops of the Alaktaka dye. किसलयनिकरम् (object of उद्वहद्भिः) collection of sprouts. ग्रन्थि...मूलैः the roots of which are resorted to by crowds (कुल) of chamarîs (from whose hair chowries are made) delighted by eating (the fruits of) ग्रन्थिपर्णक trees (a very fragrant tree). कर्पू...प्रायै mostly containing camphor and Aguru (the fragrant aloe wood) trees. इन्द्रायु...वस्थानैः which were घनावस्थान like the rainbow. घनावस्थान (घनं अवस्थानं येषां) means 'that were thickly planted' with reference to trees; and (घने मेघे अवस्थानं येषां) 'that remain on clouds' with reference to rainbows. The only point of resemblance between trees and rainbows is the fact of the word घनावस्थान being applicable to both (though in different senses) by a pun on the word घन. In the same way there are a number of comparisons below in which the common property consists solely in the fact that the same word is applicable to two objects. Bâṇa is very fond of this quibble on words. कुमु...भ्यन्तरैः (अदत्तः दिनकरस्य सूर्यस्य कराणां किरणानां प्रवेशः तेन शिशिरं शीतलं अभ्यन्तरं येषाम्) whose inside is cool, because no entrance is allowed to the rays of the sun, like कुमुद lotuses. The trees are so thick that the Sun's rays cannot penetrate them; कुमुदs (moon-lotuses) close their petals in the day and so the sun's rays cannot enter them. दाशरथि ...प्रान्तैः whose boundaries are surrounded by lotuses as dark as

collyrium (अंजनवन्नीलानि नलानि कमलानि तैः परिगतः प्रान्तः येषाम्) like the armies of Râma, the son of Das'aratha (the extremities of which are surrounded *i.e.* commanded by अञ्जन, नील and नल the monkey chiefs अञ्जननीलनलैः परिगताः प्रान्ताः येषाम्). The monkey नल built the सेतु. प्रासादे...वतैः which were full of doves, like palaces (on which there are monkeys). पारावतः means 'dove, monkey.' We may also assign the same meaning to पारावत in connection with trees and palaces. भवन...सनैः in which were present (संनिहित) वेत्र (ratan) and असन trees (संनिहिताः वेत्रासनाः येषु), like ascetics living in their houses (संनिहितानि वेत्रासनानि येषाम् who have chairs made of cane near them). भवनतापस appears to be an ascetic who does not resort to a forest &c. for practising austerities. रुद्रै...परिकरैः whose cluster is tied round by the pepperbetel creepers (नागलताभिः ताम्बूलवल्लीभिः बद्धः परिकरः समूहः येषाम्) like the Rudras whose loins are girded up by the creeper-like serpents (नागाः लताः इव ताभिः बद्धः परिकरः येषाम्). The Rudras are eleven and hence the plural. Serpents entwine themselves round S'iva. उदधि...जालकैः (निरन्तरोद्भिन्नानि प्रवाललताङ्कुरजालकानि येषु) in which numbers of tender leaves and sprouts of creepers are thickly (निरन्तर) put forth, as if they (trees) were the sandy banks of the ocean (on which also shoots of coral appear thickly). In the latter case प्रवाललता means coral, while in the former we separate as प्रवाल and लताङ्कुर and प्रवाल means 'leaves'. अभिषेक...सनाथैः accompanied by the flowers, fruits and shoots of all plants, like medicated waters for a bath (in which also a number of plants are used). 'कुष्ठमांसीहरिद्राभिर्वचाशैलेयचन्दनैः। मुराचम्पककर्पूरैः मुस्ता सर्वौषधिः स्मृता ॥'. आलेख्य...संशोभितैः adorned with hundreds of birds whose wings (पत्र) are coloured (चित्र) in different (natural) hues, like houses with paintings (आलेख्य). Here वर्ण has two senses (1) natural colour; (2) paint. The house also is decorated with hundreds of birds painted upon it. कुरु... सेवितैः which are resorted to by भारद्वाज (sky-lark) birds, like the Kurus, who were served by the Brâhman (द्विज) भारद्वाज (Drôṇa). Drôṇa was the teacher of the sons of धृतराष्ट्र and पाण्डु. महा... मुखैः—in which bees (शिलीमुख) are attracted by पुन्नाग (Marathi नागकेशर) trees, like the beginnings of great battles, in which arrows (शिलीमुख) are drawn by the best of men (पुन्नाग, पुंसु नरेषु नागः). महा... तलैः the ground at the root of which (trees) is touched by the new sprouts hanging down, like big elephants that touch the ground with their hanging leaf-like tails (प्रलम्बः बालः एव पल्लवः तेन स्पृष्टं भूतलं यैः). The मेदिनी says 'बालो ना कुन्तलेऽश्वस्य करिणश्चापि बालधौ.' The commentator (in N) understands चमरप्रान्ताः by बालपल्लवाः, which

appears to us unwarranted and farfetched. He remarks further 'शोभातिशयार्थं हस्तिनां चामराणि कर्णे बध्यन्ते इति सर्वप्रसिद्धम्.' We fail to see how the चामरs on the ears of elephants touch the ground. Our interpretation is quite natural and reasonable. अप्रमत्त... गुल्मकैः on the skirts ( पर्यन्तः ) of which ( trees ) there are many bushes ( गुल्मकः ), like vigilant ( अप्रमत्त ) kings, who place many detachments on their borders ( पर्यन्तेऽवस्थिताः बहवः गुल्मकाः येषाम्). गुल्मक is a technical name applied to a division of an army consisting of 45 footsoldiers, 27 cavalrymen, 9 elephants and 9 chariots. दंशितै...कायैः whose bodies are covered by the armour in the form of a crowd of bees (भ्रमराणां संघातः समूहः एव कवचं तेन आवृतः कायः येषाम्), like mailed persons whose bodies are covered with armour ( resembling ) a crowd of bees ( भ्रमरसंघातसदृशं कवचं तेन आवृतः कायः येषाम्). The com. takes भ्रमर in the sense of the 'nails' on the armour. प्रमाणा...गुञ्जैः In which berries of Gunjâs are touched with their fingers by monkeys ( वानरकराङ्गुलिभिः स्पृष्टाः गुञ्जाः येषु), like persons ready ( अभिमुख ) to weigh ( प्रमाण ). In taking वानर &c. with प्रमाणाभिमुखैः we must separate as वा ( or ) नरकराङ्गुलि &c. It is well-known that Gunjâ berries are used in weighing gold and silver. अवनि...तलैः the ground underneath which is marked by the foot-prints of lions ( सिंहपादैः अङ्कितं तलं येषाम्), like the beds of kings, the four pedestals of which were shaped into the likeness of a lion's foot ( सिंहपादेषु अंकितानि तलानि येषाम्). आरब्ध...वृतैः surrounded by crowds of peacocks with erect crests (उद्गता शिखा येषां ते उच्छिखाः शिखिनः तेषां मण्डलं तेन परिवृतैः), like those who have begun the performance of the penance of five fires. आरब्धा पंचतपःक्रिया (पंचाग्निसाधनं) यैः ते आरब्धपंचतपःक्रियाः. उच्छिखाः उद्गतज्वालाः शिखिनः वह्नयः तेषां मण्डलं तेन परिवृतैः who are surrounded by (four) fires whose flames are blazing up. The पंचाग्निसाधन consists in sitting in the midst of four fires while the eye is fixed on the dazzling disc of the sun. Compare कुमारसंभव 5. 20 शुचौ चतुर्णां ज्वलतां हविर्भुजां शुचिस्मिता मध्यगता सुमध्यमा । विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत ॥. दीक्षितै...यैनैः against which horns are rubbed by spotted antelopes ( कृतं कृष्णसारैः विषाणानां कण्डूयनं येषु ), like persons who are initiated for a sacrifice, who scratch their bodies with the horn of an antelope ( and not with their nails for the sake of purity, it seems ). कृतं कृष्णसारस्य विषाणेन कण्डूयनं यैः. Persons who were initiated for the performance of a sacrifice were to scratch their bodies with the horn of an antelope. जरद्रह...धरैः possessed of fibres and round trenches ( आलवालक-मण्डल ) ( for holding water ), like old sages that remain in their houses ( and do not resort to a lonely cave or do

